दित्वाद् घिनुण्। व्यासस्येदं वैयासं वचो भारतम् । वृद्धाच्छेन बाधितत्वादणत्र न तथा सुलभः । गुणान् गृह्णातीति गुणग्राहि । आख्यानिका वृत्तम् ॥ ३ ॥

**सर्वेण सर्वाश्रय इत्यनिन्द्यमानन्दभाजा जनितं जनेन ।**
**यश्च द्वितीयं स्वयमद्वितीयो मुख्यः सतां गौणमवाप नाम ॥ ४ ॥**

यश्च दत्तकः स्वयमात्मना सर्वाश्रय इत्येवं द्वितीयं संज्ञान्तरं लेभे प्राप । कीदृशं, सर्वेणाखिलेन जनेन आनन्दभाजा तुष्टेन जनितं कृतम् । तथा गौणं, गुणाः प्रवृत्तिनिमित्तं तत्रागतं गौणम् अर्थानुगतं, सर्वेषामाश्रयत्वात्। यदा हि सर्वे तत्र द्विजात्यनाथातिथिमित्रबान्धवा विश्राम्यन्ति तदासौ सर्वाश्रयो नतु नाममात्रेण । अत एवानिन्द्यं प्रशस्यं श्लाघ्यम् । स कीदृशोऽद्वितीयः सर्वोत्कृष्टः । न विद्यतेऽस्मादधिकगुणो द्वितीय इति कृत्वा । तथा साधूनां मुख्यः प्रधानानामग्रणीः। सर्वं चैतद्विरुद्धमिवाभासते । यस्य द्वितीयं नाम विद्यते स कथमद्वितीयो भवेत् । यश्च मुख्यः स कथममुख्यं लभते । अविरोधस्तु व्याख्यात एव । इतिनात्र स्वरूपेणैवावस्थाप्यमानस्य सर्वाश्रयशब्दस्य प्रातिपदिकार्थमात्रत्वे सति कर्मत्वाभावात् द्वितीयानुपपत्तिः । मुखमिव मुख्यः "शाखादिभ्यो यः" । विरोधालङ्कारः । इन्द्रवज्रा वृत्तम् ॥ ४ ॥

**श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्म**
**लक्ष्मीपतेश्चरितकीर्तनमात्रचारु ।**
**तस्यात्मजः सुकविकीर्तिदुराशयादः**
**काव्यं व्यधत्त शिशुपालवधाभिधानम् ॥ ५ ॥**

तस्य दत्तकस्यात्मजोऽद एतत् काव्यं शिशुपालवध इत्यभिधानं व्यधत्त व्यरचयत् । कया सुकवीनां वररुचिसुबन्धुकालिदासभारविभट्टिबाणमयूरादीनां या कीर्तिः ख्यातिर्यशस्तत्र या दुराशा दुरभिलाषस्तया, महाकविकीर्तिलिप्सयेत्यर्थः । दुष्टत्वं त्वाशायाः स्वल्पबुद्धित्वेन सुकविकीर्तेरप्राप्यत्वात् । तथा च कालिदासः "मन्दः कवियशःप्रार्थी" इति । कीदृक् काव्यं श्रीरित्ययं शब्दो मङ्गलवाचकत्वाद् रम्यं कृतं सर्गाणां समाप्तौ लक्ष्म चिह्नं यस्य तत् श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्म । तथा भगवतो लक्ष्मीपतेर्नारायणस्य यच्चरितं चेष्टितं तस्य कीर्तनं वर्णनं तन्मात्रेण चारु मनोहरं नत्वलङ्कारादियोगादित्यनौद्धत्य-

कथनम् । भङ्ग्या तु सर्वे गुणा अत्र काव्ये सन्ति इत्युक्तं भवति । श्रीरित्ययं शब्दः श्रीशब्दः । मयूरव्यंसकादित्वात् समासः । यदि वा कर्मधारयः, श्रीशब्दश्चासौ शब्दश्चेति । केवलं चरितकीर्तनं चरितकीर्तनमात्रम् इत्यस्वपदेन विग्रहः । "सुप् सुपा" इति समासः । वसन्ततिलकं वृत्तम् । उदात्तो मध्यमो वालङ्कारः ॥ इति भद्रम् ॥ ५ ॥

"सूनुरानन्ददेवस्य रणे (?) भूव्योमभास्वतः (१२०१) ।
व्यधत्त टीकां काव्येऽस्मिन् वल्लभः सूरिवल्लभाम् ॥
श्लोकानां सूचनेनैषा सहस्राणि तु द्वादश ।
मूलग्रन्थविहीना तु विद्वज्जनमनोहरा" इति ॥



समाप्तेयं शिशुपालवधटीका कृतिः श्रीआनन्ददेवसूनोः
श्रीपरमार्थचिह्नापरनाम्नो वल्लभदेवस्येति
शुभम् ॥

